'सुवशीकरणं शरीरिणां प्रियवाक्यादपरं न विद्यते ।
मधुरं च रुवन् यथोचितं परपुष्टोऽपि जनस्य वल्लभः ॥'
७।१९।७८

'कुपितस्य रिपोः प्रशान्तये प्रथमं साम विधीयते बुधैः ।
कतकेन विना प्रसन्नतां सलिलं कर्दमितं प्रयाति किम् ॥'
७।२१।७८

'वचसा परुषेण वर्धते मृदुना शाम्यति कोप उद्धतः ।
पवनेन यथा दवानलो घनमुक्तेन च भूरिवारिणा ॥'
७।२२।७८

'उपयाति न विक्रियां परः परिणामेऽपि च सान्त्व-
साधितः ।
सलिलेन तु भस्मसात्कृतो ज्वलनः प्रज्वलितुं किमीहते ॥'
७।२४।७८

'विकृतिं भजते न जातुचित्कुपितस्यापि मनो
महात्मनः ।
परितापयितुं न शक्यते सलिलं वारिनिधेस्तृणोल्कया ॥'
७।२५।७८

'नयवर्त्मनि यः सुनिश्चितं यतते तस्य न विद्यते रिपुः ।
ननु पथ्यभुजां किमामयः प्रभवत्यल्पमपि प्रबाधितुम् ॥'
७।२६।७९

'नयवित्स बुधैः प्रशस्यते कुरुते यस्य वचोऽर्थसाधनम् ॥'
७।३२।७९

'परिकुप्यति यः सकारणं नितरां सोऽनुनयेन शाम्यति ।
अनिमित्तरुपः प्रतिक्रिया क्रियतां केन नयेन
कथ्यताम् ॥' ७।३३।७९

'अतिरोषवतो हितं प्रियं वचनं प्रत्युत कोपदीपकम् ।
शिखितप्ततमे हि सर्पिषि प्रपतत्तोयमुपैति वह्निताम् ॥'
७।३४।८०

'अभिमानिनमार्द्रचेतसं पुरुषं प्रह्वयति प्रियं वचः ।'
७।३५।८०

'मृदुतामुपयाति वह्निना खरतामेति जलेन चायसम् ।
इति वैरिनिपीडितस्तथा विनतिं याति खलो न
चान्यथा ॥' ७।३६।८०

'न भवत्यथ कस्य वा सतः परिभूतेरिह कारणं क्षमा ॥'
७।४१।८०

'उपगच्छति सामभिः शमं महतो नैव निसर्गशात्रवः ।
भजते च स तैः प्रचण्डतां सलिलैरौर्वशिखीव वारिधेः ॥
७।४३।८१

'सुविचार्य कृताद्धि कर्मणः परिणामेऽपि भयं न जायते ।
अतएव विवेकवान् क्रियामविचार्यारभते न जातुचित् ॥
७।५२।८२

'किमसाध्यं पुरुपुण्यसम्पदः' ७।५७।८३

'कुरुते प्रियतामपूर्वता ननु कान्त्या रहितेऽपि वस्तुनि।'
७।७३।८५

'ननु दुःशिक्षितमापदां पदम् ।' ७।७९।८५

'नहि सेवकः स्वतन्त्रः' ७।९७।८८

## सर्ग ८

'तोयधेरतिमहत्वमम्भसः किं ब्रवीति न तरङ्ग संहतिः'
८।३।८९

'साधवो ननु परोक्षबान्धवाः' ८।५।९०

'जन्मनः खलु फलं गुणार्जनं प्रीणनं गुणफलं महात्म-
नाम् ।' ८।७।९०

'यः प्रतीपमुपयाति वर्त्मनः सोऽधिगच्छति किमीप्सितां
दिशम् ।' ८।९।९०

'स्वामिनं सुहृदमिष्टसेवकं वल्लभामनुजमात्मजं गुरुम् ।
मातरं च पितरं च बान्धवं दूषयन्ति न हि नीति-
वेदिनः ॥' ८।१०।९०

'चित्तवृत्तिमवयन् प्रभोः पुरा कः करोति विनयातिल-
ङ्घनम् ।' ८।१२।९१

'यः सदा भवति निर्जितेन्द्रियस्तस्य नास्ति परिभूति-
रन्ध्रतः ।
जीवितं ननु तदेव सम्मतं यन्निकाररहितं मनस्वि-
नाम् ॥' ८।१८।९१

'तावदेव पुरुषः सचेतनस्तावदाकलयति क्रमाक्रमम् ।
तावदुद्वहति मानमुन्नतं यावदिन्द्रियवशं न गच्छति ॥'
८।१९।९२

'यः कलत्रमय पाशवेष्टितो सून्नतोऽपि स विलङ्घ्यते
परैः ।
'वल्लरीवलयितं महातरुं नाधिरोहति किमाशु बालकः'
८।२०।९

'इन्द्रियार्थरतिरापदां पदं कस्य वा तनुमतो न जायते ।' ८।२१।९२

'युक्तसङ्गममवेक्ष्य दुर्जनः कुप्यति स्वयमकारणं परम् ।
चन्द्रिकां नभसि वीक्ष्य निर्मलां कः परो भषति मण्डलाद्विना ॥' ८।३१।९३

'यो विवेकरहितो यथेच्छया वर्तते पथि सतामसम्मते ।
निस्त्रपः स खलु दण्ड्यते न कैस्तुङ्गशृङ्गशफवर्जितः पशुः ॥' ८।३२।९३

'द्वौ सतामभिमतौ नरोत्तमौ जन्म संसदि तयोः प्रशस्यते ।
यो न मुह्यति भये पुरास्थिते यस्य संपदि मनो न माद्यति ॥' ८।३५।९४

'न्यायहीनमिह यस्य वाञ्छितं खेचरः स इति कथ्यते कथम् ।
जातिमात्रमनिमित्तमुन्नतेः किं प्रयाति गगने न वायसः ॥' ८।४०।९५

'स्तब्धमुत्खनति किं न मूलतः पादपं तटरुहं नदीरयः ।
वेतसः प्रणमनाद्विवर्धते चाटुरेव कुरुते हि जीवितम् ।' ८।४८।९६

'संभ्रमेऽपि कुशलो न मुह्यति' ८।६६।९८

'न श्रिये किमनुरूपसंगमः' ८।६७।९९

## सर्ग ९

'सेवामतो नेच्छति पापभीरुः' ९।५।१०३

'गुणच्युतः को लभते प्रतिष्ठाम्' ९।७।१०३

'प्राणव्ययं वाञ्छति को न वीरः ।' ९।८।१०३

'न साधयेत् किं खलु सुप्रयुक्तः ।' ९।११।१०४

'कोपो हि शौर्यस्य परः सहायः ।' ९।२२।१०५

'विगुणो हि हेयः' ९।३३।१०५

'को निर्दयः संश्रयिणां विपत्तौ' ९।२८।१०६

'न दुःखितं हन्ति महानुभावः' ९।३२।१०७

'दौःस्थ्यं न स्थेमवरिष्ठतानाम् ।' ९।३८।१०८

'विपत्सु वामोऽप्युपयोगमेति' ९।३९।१०८

'समो हि जात्यो विधुरे सुखे वा' ९।४०।१०८

'उदार्यं धैर्यं प्रवरो हि धीरः' ९।४३।१०८

'पूर्णे दिने को न हिनस्ति सत्त्वान्' ९।४४।१०८

'सुनिश्चितः किं न करोति वीरः' ९।४५।१०९

'को वा न गृह्णाति कृतावदानान्' ९।४९।१०९

'प्रसाधनं भूमिभृतां हि शौर्यम्' ९।६०।१११

'हत्वा रिपुं को न विभाति युद्धे' ९।७०।११२

'गुणाधिके कस्य न पक्षपातः' ९।८३।११३

## सर्ग १०

'सतां हि लक्ष्म्या विनयो वितीर्यते' १०।८।११९

'दयालवो हि प्रणतेषु साधवः' १०।१४।११९

'निरर्थकं गर्जितमप्यकारणम्' १०।२०।१२०

'किमस्ति लेशोऽपि सुखस्य संसृतौ' १०।३४।१२३

'नदीसहस्रैरिव यादसां पतिस्तनूनपादिन्धनसंचयैरिव ।
चिराय संतुष्यति कामवस्मरो न कामभोगैः पुरुषो हि जातुचित् ॥' १०।३६।१२३

'शुभाशुभं कर्मफलं समश्नुते ध्रुवं पुमान्प्राक्तनमेक एव हि ।' १०।३८।१२३

'निवृत्तरागप्रसरस्य यत्सुखं शमात्मकं शाश्वतमात्मनि स्थितम् ।
दुरन्तमोहानलतप्तचेतसः किमस्ति तस्यैकलवोऽपि रागिणः ॥' १०।४२।१२४

'जरागृहीतं नवयौवनं यथा निवर्तते नैव पुनःकदाचन ।
तथायुरारोग्यमपि प्रतिक्षणं विलुप्यमानं नियतेन मृत्युना ॥' १०।४४।१२४

'निबन्धनं नास्ति हि भव्यचेतसाम्' १०।५६।१२६

'तमोपहा धीः सकलार्थ दर्शनम्' १०।६१।१२७

'महात्मनां नात्र वयः समीक्ष्यते' १०।६४।१२७

'सुखं किमन्यन्निजबन्धुदर्शनात्' १०।७४।१२८

## सर्ग ११

'न हि कणिकापि सुखस्य नारकाणाम्' ११।२३।१३५

'जिनवचनरसायनं दुरापं श्रुतियुगलाञ्जलिना निपीयमानम् ।
विषयविषतृषामपास्य दूरं कमिह करोत्यजरामरं न भव्यम् ॥' ११।४०।१३८

'जनयति सद्विरहो न कस्य बाधिम्' ११।५२।१३९

'धृतिकवचितधीरमानसस्य प्रशमरतिर्न सुखायते किमेका ।' ११।५८।१४०
'न हि विधुरे परिमुह्यते क्षमावान्' ११।६१।१४०
'सम्यक्त्वशुद्धिरथवा न सुखाय केषाम्' ११।६४।१४१
'कस्योन्नतिं न कुरुते भुवि साधुवाक्यम्' ११।६७।१४१

## सर्ग १२

'प्रियेषु यत्प्रेमरसावहत्वं तच्चारुताया हि फलं प्रवानम्' १२।२८।१४७
'तथाहि लोके महतां विभूतिर्महीयसी नापि विकारहेतुः' १२।३३।१४८
'अचिन्त्यरूपा महतां हि वृत्तिः' १२।३४।१४८
'भव्ये मुमुक्षोर्न हि निःस्पृहा धीः' १२।४४।१४९
'संसारवासस्य हि कर्म हेतुः' १२।५२।१५०
'प्रत्येति भव्यो हि मुमुक्षुवाक्यम्' १२।५९।१५१
'न कालहानिर्महतां हितार्थे' १२।६१।१५१

## सर्ग १३

'प्रीतये भुवि न कस्य सुपुत्रः' १३।१९।१५६
'संसृतेर्भुवि बिभेति हि भव्यः' १३।२२।१५७
'श्रीमतामविनयो हि सुदूरः' १३।२३।१५७
'चन्दनः किमु जहाति हिमत्वं सर्पवक्त्रविषवह्नियुतोऽपि ।' १३।२७।१५७
'यस्य रज्यति मनो न कलत्रे सत्यपि स्मरभये स हि धीरः' १३।२८।१५८
'कं न तापयति मित्रवियोगः' १३।४०।१५९
'आपदा परिगतं सुकृतज्ञः स्वोपकारिणमपोज्झति को वा ।' १३।४४।१६०
'रन्ध्रमेत्य मलिनो हि बलीयान्' १३।४९।१६१
'न श्रिये हि तमसा सहयोगः' १३।५०।१६१
'रागिणः खलु न सिध्यति कार्यं किञ्चिदप्यभिमतं पुरुषस्य' १३।५९।१६३
'नूनमूनमपि वा जयलक्ष्मीरभ्युपैति समये सुसहायम्' १३।६५।१६४
'प्रेम कस्य न करोति हि मायाम्' १३।६९।१६४
'योषितां खलु मनो हि निगूढम्' १३।७०।१६४
'स्निह्यत्यहो युवतिरेव चिराय पुंसः' १३।७८।१६६

## सर्ग १४

'विद्यन्ते भुवि महतां न दुष्कराणि' १४।४।१६८
'संसार व्यसननिरासिनी मुमुक्षोः, शोभायै भवति न कस्य वा तपस्या' १४।१२।१६९
'शीतांशोरिव किरणाः सतां गुणौघा, विश्वासं विदधति कस्य वा न शुभ्राः ।' १४।१४।१७०
'को दिष्ट्या भवति सचेतनो महत्या' १४।१५।१७०
'प्राग्जन्म प्रजनितभूरि पुण्य शक्तिः, किं कासां न भवति संपदां सवित्री ।' १४।२०।१७१
'प्राज्ञानां किमिह कुतूहलस्य हेतुः' १४।२१।१७१
'दुःसाध्यं न हि भुवि भूरिपुण्यभाजाम् ।' १४।२३।१७१
'दुःप्रापं न हि जगतां समग्रपुण्यैः' १४।३१।१७२
'धीराणां न हि विभवो विकारहेतुः' १४।३६।१७३
'श्रेयोऽर्थान्नहि विजहाति निर्मला धीः' १४।३८।१७३
'मोहान्धो ननु सकलोऽपि जीवलोकः' १४।४३।१७४
'ते धन्या जगति विदां त एव मुख्याः पर्याप्तं सुकृतफलं च भूरि तेषाम् ।'
'यैस्तृष्णाविषलतिका समूलतूलं प्रोन्मूल्य प्रतिदिशमुज्झिता सुदूरम् ।' १४।४४।१७४
'संसारो व्यसनमयो ह्यनात्मनीनः' १४।४६।१७४
'भ्रान्तात्मा प्रशमरतो न जातु लोकः' १४।४७।१७४
'जीवानामहितरतिः परं स्वभावः' १४।४८।१७५

## सर्ग १५

'ज्ञात्वा दौस्थ्यं संसृतेरप्रमेयं, भव्यः को वा सिद्धये नोत्सहेत ।' १५।११।१७६

## सर्ग १६

'न हि दुर्जयोऽस्ति सुतपोऽवलम्बिनाम्' १६।८।२१८
श्रुतमिद्धमप्यफलमेव विषयनिरतस्य चेष्टिते ।
शस्त्रमिव निशितमाजिमुखे भय विह्वलस्य समवेहि केवलम् ।' १६।१०।२१९
'शमिनामहो चरितमद्भुतास्पदम्' १६।२९।२२१
'भीतिविरहितसमाचरणः, किमु दुष्करेऽपि परिमुह्यति प्रभुः ।' १६।३०।२२१
'त्यक्तसकलममतोऽपि सदा यतते परोपकृतये हि सज्जनः ।' १६।४१।२२३

# टीकाकर्तृ प्रशस्तिः

गल्लीलालतनूजेन जानक्युदरसंभुवा ।
पन्नालालेन वालेन सागरग्रामवासिना ॥ १ ॥

द्वितीये माधवेमासे कृष्णपक्षस्य सत्तिथौ ।
एकादश्यभिधानायां वारेभौमाभिधानके ॥ २ ॥

वसुनवचतुर्द्वन्द्वप्रमिते शुभवत्सरे ।
वीरनिर्वाणसंज्ञाने प्रदोषे गतदोषके ॥ ३ ॥

वर्धमानचरित्रस्य रम्यस्यासगसत्कृते ।
महाकाव्यस्य टीकेयं राष्ट्रभाषामयी कृता ॥ ४ ॥

भूयाद्विद्वत्प्रिया भूमावाकल्पं कल्पनायुता ।
स्थेयात्तावत्पृथिव्याञ्च यावच्चन्द्रदिवाकरौ ॥ ५ ॥

अज्ञानेन प्रमादेन स्खलितं यन्मयात्र भोः ।
क्षमध्वं तद्बुधा यूयं ज्ञानवारिधिसंनिभाः ॥ ६ ॥

अज्ञोऽहं काव्यकर्तारमसगं बुधसन्नुतम् ।
विरुद्धं भाषितं स्वीयं क्षमयामि निरन्तरम् ॥ ७ ॥

काव्यं मनोहरं श्राव्यं भव्यभावाभिभूषितम् ।
कल्पनोर्मि समाकीर्णं सत्यमब्धीयतेतराम् ॥ ८ ॥

तदेतत्तर्तुकामानां छात्राणां विदुषां तथा ।
टीकेयं मे तरीभूयात्सततं सौख्यदायिनी ॥ ९ ॥

सार्द्धद्वयसहस्राब्दी समारोहस्य वत्सरे ।
मासद्वयप्रयासो मे रोचतां बुधपङ्क्तये ॥ १० ॥

# वर्द्धमान वन्दना

हे वीर ! हे गुणनिधे ! त्रिशलातनूज ।
मज्जन्तमत्र भववारिनिधौ दयालो !
दत्त्वालम्वनमतः कुरु मां विदूरं
मुक्त्वा भवन्तमिह कं शरणं व्रजानि ॥ १ ॥

पापप्रचण्डवनवह्निशमे नदीष्णं
सच्चातकावलितृपापरिहारदक्षम् ।
सन्मानसस्य परिवृद्धिकरं समन्तात्
तं वीरवारिदमहं विनमामि सम्यक् ॥ २ ॥

आनन्दमन्दिरममन्दमनिन्द्यमाद्यं
वन्दारुवृन्दपरिवन्द्यपदारविन्दम् ।
कुन्दातिसुन्दरयशो विजितेन्दुविम्वं
वन्दे मुदा जिनपतिं वरवीरनाथम् ॥ ३ ॥

गन्धर्वगीतगुणगौरवशोभमानं
सद्वोधदिव्यमहसा महता सुयुक्तम् ।
वन्दे जिनं जितभवं खलु वर्धमानं
संवर्धमानमहिमानमुदारमोदात् ॥ ४ ॥

नीहारहारहरहाससहासकाश-
संकाशकीर्तिमतिवीरमुदारवोधम् ।
देवेन्द्रवृन्द परिवन्दित पादपद्मं
वन्दे विभुं जिनपतिं त्रिशलातनूजम् ॥ ५ ॥

●